भूषितनवयौवने वयसि वर्तमाना, गृहीतचामरप्रचलद्भुजलता पितामहमुपवीजयन्ती, निर्भर्त्सनताडनजातरागाभ्यामिव स्वभावारुणाभ्यां पादपल्लवाभ्यां समुल्लासमाना, शिष्यद्वयेनेव पदक्रममुखरेण नूपुरयुगलेन वाचालितचरणा, मदनगरतोरणस्तम्भविभ्रमं बिभ्राणा जङ्घाद्वितयम्, सलीलमुत्कलहंसकुलकलालापप्रलापिनि मेखलादाम्नि विन्यस्तवामहस्तकिसलया, विद्यान्मावसनिवासलग्नेन गुणकलापेनेवांसावलम्बिना ब्रह्मसूत्रेण पवित्रीकृतकाया, भास्वन्मध्यनायकमनेकमुक्तानुयातमपवर्गमार्गमिव हारमुद्वहन्ती, वदनप्रविष्टसर्वविद्यार्चरणालक्तकरसेनेव पाटलेन स्फुरता दशनच्छदेन विराजमाना, संक्रान्तकमलासनकृष्णाजिनप्रतिमां साममधुरगीताकर्णनावतीर्णशशिहरिणामिव कपोलस्थलीं दधाना, तिर्यक्सावज्ञमुन्नमितैकभ्रूलता, श्रोत्रमेकं विस्वरश्रवणकलुषितं प्रक्षालयन्तीवापाङ्गनिर्गतेन• लोचनाश्रुजलप्रवाहेणेतरश्रवणेन च विकसितसितसिन्धुवारमञ्जरीजुषा हसतेव प्रकटितविद्यामदा, श्रुतिप्रणयिभिः प्रणवैरिव कर्णावतंसकुसुममधुकरकुलैरुपास्यमाना, सूक्ष्मविमलेन प्रज्ञाप्रतानेनेवांशुकेनाच्छादितशरीरा, वाङ्मयमिव निर्मलं• दिक्षु दशनज्योत्स्नालोकं विकिरन्ती देवी सरस्वती श्रुत्वा जहास ।

दृष्ट्वा च तां तथा हसन्तीं स मुनिः 'आः पापकारिणि, दुर्गृहीतविद्यालवावलेपदुर्विदग्धे, मामुपहससि' इत्युक्त्वा शिरःकम्पशीर्यमाणबन्धविशरारोरुन्मिषत्पिङ्गलिम्नो जटाकलापस्य रोचिषा सिञ्चन्निव रोषदहनद्रवेण दश दिशः, कृतकालसंनिधानामिवान्धकारितललाटपट्टाष्टापदामन्तःपुरमण्डनपत्रभङ्गमकरिकां भ्रुकुटिमाबध्नन्, अतिलोहितेन चक्षुषामर्षदेवतायै स्वरुधिरोपहारमिव प्रयच्छन्, निर्दयदष्टदशनच्छदभयपलायमानामिव वाचं रुन्धन्दन्तांशुच्छलेन, अंसावस्रंसिनः शापशासनपट्टस्येव ग्रथ्नन्ग्रन्थिमन्यथा कृष्णाजिनस्य, स्वेदकणप्रतिबिम्बितैः शापशङ्काशरणागतैरिव सुरासुरमुनिभिः प्रतिपन्नसर्वावयवः, कोपकम्पतरलिताङ्गुलिना करेण प्रसादनलग्नामक्षरमालामिवाक्षमालामाक्षिप्य कामण्डलवेन वारिणा समुपस्पृश्य शापजलं जग्राह ।

अत्रान्तरे स्वयम्भुवोऽभ्याशे समुपविष्टा देवी मूर्तिमती पीयूषफेनपटलपाण्डरं कल्पद्रुमदुकूलवल्कलं वसाना, बिसतन्तुमयेनांशुकेनोन्नतस्तनमध्यबद्धगात्रिकाग्रन्थिः, तपोबलनिर्जितत्रिभुवनजयपताकाभिरिव तिसृभिर्भस्मपुण्ड्रकराजिभिर्विराजितललाटाजिरा, स्कन्धावलम्बिना सुधाफेनधवलेन तपःप्रभावकुण्डलीकृतेन गङ्गास्रोतसेव योगपट्टकेन विरचितवैकक्ष्यका, सव्येन ब्रह्मोत्पत्तिपुण्डरीकमुकुलमिव स्फटिककमण्डलुं करेण कलयन्ती, दक्षिणस-

१ '०यौवने नवे वयसि' अ-क. २ 'धर्मनगर' ब. ३ 'धाम्नि' ब. ४ '०विद्यालक्तक०' अ-क. ५ 'शोचिषा' ब-क. ६ 'अन्तकमण्डन०' ब. ७ '०लम्बिना फेन०' ब. ८ 'गगनगङ्गा०' ब.

क्षमालाकृतपरिक्षेपं कम्बुनिर्मितोर्मिकादन्तुरितं तर्जनतरङ्गिततर्जनीकमुत्क्षिपन्ती करम्, 'आः पाप, क्रोधोपहत, दुरात्मन्, अज्ञ, अनात्मज्ञ, ब्रह्मबन्धो, मुनिखेट, अपसद, निराकृत, कथमात्मस्खलितविलक्षः सुरासुरमुनिमनुजवृन्दवन्दनीयां त्रिभुवनमातरं भगवतीं सरस्वतीं शप्तुमभिलषसि' इत्यभिदधाना, रोषविमुक्तवेत्रासनैरोङ्कारमुखरितमुखैरुत्क्षेपदोलायमानजटाभारभरितदिग्भिः परिकरबन्धभ्रमितकृष्णाजिनाटोपच्छायाश्यामायमानदिवसैरमर्षनिःश्वासदोलाप्रेङ्खोलितब्रह्मलोकैः सोमरसमिव स्वेदविसरव्याजेन स्रवद्भिरग्निहोत्रपवित्रभस्मस्मेरललाटैः कुशतन्तुचारुचामरचीरचीवरिभिराषाढिभिः प्रहरणीकृतकमण्डलुमण्डलैर्मूर्तैश्चतुर्भिर्वेदैः सह वृषीमपहाय सावित्री समुत्तस्थौ।

ततो 'मर्षय भगवन्, अभूमिरेषा शापस्य' इत्यनुनाथ्यमानोऽपि विबुधैः, 'उपाध्याय, स्खलितमेकं क्षमस्व' इति बद्धाञ्जलिपुटैः प्रसाद्यमानोऽपि स्वशिष्यैः, 'पुत्र, मा कृथास्तपसः प्रत्यूहम्' इति निवार्यमाणोऽप्यत्रिणा, रोषावेशविवशो दुर्वासाः 'दुर्विनीते, व्यपनयामि ते विद्याजनितामुन्नतिमिमाम्, अधस्ताद्गच्छ मर्त्यलोकम्' इत्युक्त्वा तच्छापोदकं विससर्ज। प्रतिशापदानोद्यतां सावित्रीं 'सखि, संहर रोषम्, असंस्कृतमतयोऽपि जात्यैव द्विजन्मानो माननीयाः' इत्यभिदधाना सरस्वत्येव न्यवारयत्।

अथ तां तथा शप्तां सरस्वतीं दृष्ट्वा पितामहो भगवान्कमलोत्पत्तिलग्नमृणालसूत्रमिव धवलयज्ञोपवीतिनीं तनुमुद्वहन्, उद्गच्छदच्छाङ्गुलीयकमरकतमयूखलताकलापेन त्रिभुवनोपप्लवप्रशमकुशापीडधारिणेव दक्षिणेन करेण निवार्य शापकलकलम्, अतिविमलदीर्घैर्भाविकृतयुगारम्भसूत्रपातमिव दिक्षु पातयन् दशनकिरणैः, सरस्वतीप्रस्थानमङ्गलपटहेनेव पूरयन्नाशाः स्वरेण, सुधीरमुवाच—'ब्रह्मन्, न खलु साधुसेवितोऽयं पन्था येनासि प्रवृत्तः। निहन्त्येष परस्तात्। उद्दामप्रसृतेन्द्रियाश्वसमुत्थापितं हि रजः कलुषयति दृष्टिमनक्षजिताम्। कियद्दूरं वा चक्षुरीक्षते। विशुद्धया हि धिया पश्यन्ति कृतबुद्धयः सर्वानर्थानसतः सतो वा। निसर्गविरोधिनी चेयं पयःपावकयोरिव धर्मक्रोधयोरेकत्र वृत्तिः। आलोकमपहाय कथं तमसि निमज्जसि। क्षमा हि मूलं सर्वतपसाम्। परदोषदर्शनदक्षा दृष्टिरिव कुपिता बुद्धिर्न त आत्मरागदोषं पश्यति। क्व महातपोभारवैवधिकता, क्व पुरोभागित्वम्। अतिरोषणश्चक्षुष्मानन्ध एव जनः। नहि कोपकलुषिता विमृशति मतिः कर्तव्यमकर्तव्यं वा। कुपितस्य प्रथममन्धकारीभवति विद्या, ततो भ्रुकुटिः। आदाविन्द्रियाणि रागः समास्कन्दति, चरमं चक्षुः। आरम्भे तपो गलति, पश्चात्स्वेदसलिलम्। पूर्वमयशः स्फुरति, अनन्तरमधरः। कथं लोकविनाशाय

१ 'आक्षेप' ब. २ 'कृष्णाजिनपटच्छाया' क. ३ 'इन्द्रियाधिष्ठानं रागः' ब.

ते विषपादपस्येव जटावल्कलानि जातानि । अनुचिता खल्वस्य मुनिवेशस्य हारयष्टिरिव वृत्तमुक्ता चित्तवृत्तिः । शैलूष इव वृथा वहसि कृत्रिममुपशमशून्येन चेतसा तापसाकल्पम् । अल्पमपि न ते पश्यामि कुशलजातम् । अनेनातिलघिम्नाद्याप्युपर्येव प्लवसे ज्ञानोदन्वतः । न खल्वनेलमूका एडा[1] जडा वा सर्व एते महर्षयः । रोषदोषनिषद्ये स्वहृदये निग्राह्ये किमर्थमसि निगृहीतवाननागसं सरस्वतीम् । एतानि तान्यात्मप्रमाद[2]स्खलितवैलक्ष्याणि, यैर्याति[3] वाच्यतामविदग्धो जनः' इत्युक्त्वा पुनराह—'वत्से सरस्वति विषादं मा गाः । एषा त्वामनुयास्यति सावित्री विनोदयिष्यति चास्मद्विरहदुःखिताम् । आत्मजमुखकमलावलोकनावधिश्च ते शापोऽयं भविष्यति' इति । एतावदभिधाय विसर्जितसुरासुरमुनिमनुजमण्डलः ससंभ्रमोपगतनारदस्कन्धविन्यस्तहस्तः समुचिताह्निककरणायोदतिष्ठत् । सरस्वत्यपि शप्ता किंचिदधोमुखी धवलकृष्णशारां कृष्णाजिनलेखामिव[4] दृष्टिमुरसि पातयन्ती, सुरभिनिःश्वासपरिमललग्नैर्मूर्तैः शापाक्षरैरिव षट्चरणचक्रैराकृष्यमाणा, शापशोकशिथिलितहस्ता, अधोमुखीभूतेनोपदिश्यमानमर्त्यलोकावतरणमार्गेव नखमयूखजालकेन, नूपुरव्याहाराहूतैर्भवनकलहंसकुलैर्ब्रह्मलोकनिवासिहृदयैरिवानुगम्यमाना समं सावित्र्या गृहमगात् ।

अत्रान्तरे सरस्वत्यवतरणवार्तामिव कथयितुं मध्यमं लोकमवततारांशुमाली । क्रमेण च मन्दायमाने मुकुलितबिसिनीविसरव्यसनविषण्णसरसि वासरे, मधुमदमुदितकामिनीकोपकुटिलकटाक्षक्षिप्यमाण इव क्षेपीयः क्षितिधरशिखरमवतरति तरुणतरकपिलपललोहिते लोकैकचक्षुषि भगवति, प्रस्नुतमुखमाहेयीयूथक्षरत्क्षीरधाराधवलितेष्वासन्नचन्द्रोदयोद्दामक्षीरोदलहरीक्षालितेष्विव दिव्याश्रमोपशल्येषु, अपराह्णप्रचारचलिते चामरिणि चामीकरतटताडनैः[5]रणितरदने रदति सुरस्रवन्तीरोधांसि स्वैरमैरावते, प्रसृतानेकविद्याधराभिसारिकासहस्रचरणालक्तकरसानुलिप्त इव प्रकटयति च तारापथे पाटलताम्, तारापथप्रस्थितसिद्धदत्तदिनकरास्तमयार्घ्यावर्जिते रञ्जितककुभि कुसुम्भभासि स्रवति पिनाकिप्रणतिमुदितसंध्यास्वेदसलिल इव रक्तचन्दनद्रवे, वन्दारुमुनिवृन्दारकवृन्दवध्यमानसंध्याञ्जलिवने ब्रह्मोत्पत्तिकमलसेवागतसकलकमलाकर इव राजति ब्रह्मलोके, समुच्चारिततृतीयसवनब्रह्मणि[6] ब्रह्मणि, ज्वलितवैतानज्वलनज्वालाजटालाजिरेष्वारब्धधर्मसाधनशिबिरनीराजनेष्विव सप्तर्षिमन्दिरेषु, अघमर्षणमुषितकिल्बिषविषगदोल्लाघलघुषु यतिषु, संध्योपासनासीनतपस्विपङ्क्तिपूतपुलिने प्लवमाननलिनयोनियानहंसहासदन्तुरितोर्मिणि मन्दाकिनीजले, जलदेवतातपत्रे पत्ररथकुलकलत्रान्तःपुरसौधे

१ 'पण्डा जडा वा' क. २ 'प्रसाद' ब. ३ 'थाप्यतां यात्यविदग्धो' अ-क. ४ अस्मात्परं 'तपसे' इत्यधिकं ब-पुस्तके. ५ 'प्रस्तुतमखमाहेयी' ब. ६ '०ताडनरणितरदने' अ-क. ७ 'सवनव्रतब्रह्मणि' ब.

निजमधुमधुरामोदिनि कृतमधुपमुदि मुमुदिषमाणे कुमुदवने, दिवसावसानताम्यत्तामरसमधुरमधुसपीतिप्रीते सुपुप्सति मृदुमृणालकाण्डकण्डूयनकुण्डलितकन्धरे धुतपक्षराजिवीजितराजीव[1]सरसि राजहंसयूथे, तटलताकुसुमधूलिधूसरितसरिति सरति सिद्धपुरपुरंध्रिधम्मिल्लमल्लिकागन्धग्राहिणि सायन्तने तनीयसि निशानिःश्वासनिभे नभस्वति, सङ्कोचोदञ्चदुच्चकेसरकोटिसङ्कटकुशेशय[3]कोशकोटरकुटीशायिनि षट्चरणचक्रे, नृत्तोद्धूतधूर्जटिजटाटवीकुटजकुड्मलनिकरनिभे नभस्थलं स्तबकयति तारागणे, संध्यानुबन्धताम्रे परिणमत्तालफलत्वक्त्विषि कालमेघमेदुरे मेदिनीं मीलयति नववयसि तमसि, तरुणतरतिमिरपटलपाटनपटीयसि समुन्मिषति यामिनीकामिनीकर्णपूरचम्पककलिकाकदम्बके प्रदीपप्रकरे, प्रतनुतुहिनकिरणकिरणलावण्यालोकपाण्डुन्याश्यानतीलनीरमुक्तकालिन्दीकूल[4]वालुकापुलिनायमाने शातक्रतवे क्रश[5]यति तिमिरमाशामुखे, खमुचि मेचकितविकचितकुवलयसरसि शशधरकरनिकरकचग्रहाविले विलीयमाने मानिनीमनसीव शर्वरीशबरीचिकुरचये चाषपक्षत्विषि तमसि, उदिते भगवत्युदयगिरिशिखरकटककुहरहरिखरनखरनिवहहेतिनिहतनिजहरिणगलितरुधिरनिचयनिचितमिव लोहितं वपुरुद्वयरागधरमधरमिव विभावरीवध्वा धारयति श्वेतभानौ, अचलच्युतचन्द्रकान्तजलधाराधौत इव ध्वस्ते ध्वान्ते, गोलोकगलितदुग्धविसरवाहिनि दन्तमयमकरमुखमहाप्रणाल इवापूरयितुं प्रवृत्ते पयोधिमिन्दुमण्डले, स्पष्टे प्रदोषसमये सावित्री शून्यहृदयामिव किमपि ध्यायन्तीं सास्त्रां सरस्वतीमवादीत्—'सखि, त्रिभुवनोपदेशदानदक्षायास्तव पुरो जिह्वा जिह्वेति मे जल्पन्ती। जानास्येव यादृश्यो विसंस्थुला गुणवत्यपि जने दुर्जनवन्निर्दाक्षिण्याः क्षणभङ्गिन्यो दुरतिक्रमणीया[6] न रमणीया दैवस्य वामा वृत्तयः। निष्कारणा च निकारकणिकापि कलु[7]षयति मनस्विनोऽपि मानसमसदृशजनादापतन्ती। अनवरतनयनजलसिच्यमानश्च तरुरिव विपल्लवोऽपि सहस्रधा प्ररोहति शोकः। अतिसुकुमारं च जनं सन्तापपरमाणवो मालतीकुसुममिव म्लानिमानयन्ति। महतां चोपरि निपतन्नणुरपि सृणिरिव करिणां क्लेशः कदर्थनायालम्। सहजस्नेहपाशग्रन्थिबन्धनाश्च बान्धवभूता दुस्त्यजा जन्मभूमयः। दारयति दारुणः क्रकचपात इव हृदयं संस्तुतजनविरहः। सा नार्हस्येवं भवितुम्। अभूमिः खल्वसि दुःखक्ष्वेडाङ्कुरप्रसवा[9]नाम्। अपि च पुराकृते कर्मणि बलवति शुभेऽशुभे वा फलकृति तिष्ठत्यधिष्ठातरि प्रष्ठे पृष्ठतश्च कोऽ-

१ 'राजीवरजसि' ब. २ एतन्नास्ति अ-क-पुस्तकयोः. ३ 'कुशेशयकोटर०' क; 'कुटीकोटर०' ब. ४ 'वालपुलिना०' अ-क. ५ 'कृशयति' अ. ६ 'कमणीया दैवस्य' ब. ७ 'क्लेशयति' ब. ८ एतन्नास्ति अ-क-पुस्तकयोः. ९ 'प्रभावानाम्' ब-क.

वसरो विदुषि शुचाम् । इदं च ते त्रिभुवनमङ्गलैककमलममङ्गलभूताः कथमिव मुखमपवित्रयन्त्यश्रुबिन्दवः । तदलम् । अधुना कथय कतमं भुवो भागमलङ्कर्तुमिच्छसि । कस्मिन्नवतितीर्षति ते पुण्यभाजि प्रदेशे हृदयम् । कानि वा तीर्थान्यनुग्रहीतुमभिलषसि केषु वा धन्येषु तपोवनधामसु तपस्यन्ती स्थातुमिच्छसि । सज्जोऽयमुपचरणचतुरः सहपांशुक्रीडापरिचयपेशलः प्रेयान्सखीजनः क्षितितलावतरणाय । अनन्यशरणा चाद्यैव प्रभृति प्रतिपद्यस्व मनसा वाचा क्रियया च सर्वविद्याविधातारं धातारं च स्वश्रेयसे स्वचरणरजःपवित्रितत्रिदशासुरं सुधासूतिकलिकाकल्पितकर्णावतंसं देवदेवं त्रिभुवनगुरुं त्र्यम्बकम् । अल्पीयसैव कालेन स ते शापशोकविरतिं वितरिष्यति' । इति ।

एवमुक्ता मुक्तमुक्ताफलधवललोचनजललवा सरस्वती प्रत्यवादीत्—'प्रियसखि, त्वया सह विचरन्त्या न मे काञ्चिदपि पीडामुत्पादयिष्यति ब्रह्मलोकविरहः शापशोको वा । केवलं कमलासनसेवासुखमार्द्रयति मे हृदयम् । अपि च त्वमेव वेत्सि मे भुवि धर्मधामानि समाधिसाधनानि योगयोग्यानि च स्थानानि स्थातुम्' इत्येवमभिधाय विरराम रणरणकोपनीतप्रजागरा चानिमीलितलोचनैव तां निशामनयत् ।

अपरेद्युरुदिते भगवति त्रिभुवनशेखरे खणखणायमानखरखलीनक्षतनिजतुरगमुखक्षिप्तेन क्षतजेनेव पाटलितवपुष्युदयाचलचूडामणौ जरत्कृकवाकुचूडारुणारुणपुरःसरे विरोचने नातिदूरवर्ती विविच्य पितामहविमानहंसकुलपालः पर्यटन्नपरवक्त्रमुच्चैरगायत्—

'तरलयसि दृशं किमुत्सुकामकलुषमानसवासलालिते ।
अवतर कलहंसि वापिकां पुनरपि यास्यसि पङ्कजालयम्'

तच्छ्रुत्वा सरस्वती पुनरचिन्तयत्—'अहमिवानेन पर्यनुयुक्ता । भवतु । मानयामि मुनेर्वचनम्' इत्युक्त्वोत्थाय कृतमहीतलावतरणसङ्कल्पा परित्यज्य वियोगविक्लवं स्वपरिजनं ज्ञातिवर्गमवगणय्यावगणय्य त्रिः प्रदक्षिणीकृत्य चतुर्मुखं कथमप्यनुनयनिवर्तितानुयायिव्रातिव्राता ब्रह्मलोकतः सावित्रीद्वितीया निर्जगाम ।

ततः क्रमेण ध्रुवप्रवृत्तां धर्मधेनुमिवाधोधावमानधवलपयोधराम्, उद्धुरध्वनिम्, अन्धकमथनमौलिमालतीमालिकाम्, आलीयमानवालखिल्यरुद्धरोधसम्, अरुन्धतीधौततारवत्वचम्, त्वङ्गत्तुङ्गतरङ्गतरत्तरलतरतारतारकाम्,

---

१ 'अनुचरण०' ब. २ 'दातारम्' अ–क. ३ 'श्वःश्रेयसस्य चरणरजः०' अ–क. ४ 'चामीलित' ब. ५ 'स्खलत्खलीन' अ–क. ६ 'मुखक्षरक्षतजेनेव' ब. ७ 'पितामहवाहनहंसं०' ब. ८ 'तङ्गत्तुङ्गतरङ्गतरलिततारकाम्' ब.

तापसविकीर्णविरलतिलोदकपुलकितपुलिनाम्, आप्लवनपूतपितामहपातितपितृपिण्डपाण्डुरितपाराम्, पर्यन्तसुप्तसप्तर्षिकुशशयनसूचितसूर्यग्रहसूतकोपवासाम्, आचमनशुचिशचीपतिमुच्यमानार्चनकुसुमनिकरशाराम्, शिवपुरापतितनिर्माल्यमन्दारदामकाम्, अनादरदारितमन्दरदरीदृषदम्, अनेकनाकनायकनिकायकामिनीकुचकलशविलुलितविग्रहाम्, ग्राहग्रावग्रामस्खलनमुखरितस्रोतसम्, सुषुम्णास्रुतशशिसुधाशीकरस्तबकतारकिततीराम्, धिषणाग्निकार्यधूमधूसरितसैकताम्, सिद्धविरचितवालुकालिङ्गलङ्घनत्रासविद्रुतविद्याधराम्, निर्मोकमुक्तिमिव गगनोरगस्य, लीलाललाटिकामिव त्रिविष्टपविटस्य, विक्रयवीथीमिव पुण्यपण्यस्य, दन्तार्गलामिव नरकनगरद्वारस्य, अंशुकोष्णीपपट्टिकामिव सुमेरुनृपस्य, दुकूलकदलिकामिव कैलासकुञ्जरस्य, पद्धतिमिवापवर्गस्य, नेमिमिव कृतयुगचक्रस्य, सप्तसागरराजमहिषीं मन्दाकिनीमनुसरन्ती मर्त्यलोकमवततार। अपश्यच्चाम्बरतलस्थितैव हारमिव वरुणस्य, अमृतनिर्झरमिव चन्द्राचलस्य, शशिमणिनिष्यन्दमिव विन्ध्यस्य, कर्पूरद्रुमद्रवप्रवाहमिव दण्डकारण्यस्य, लावण्यरसप्रस्रवणमिव दिशाम्, स्फाटिकशिलापट्टशयनमिवाम्बरश्रियाः, स्वच्छशिशिरसुरसवारिपूर्णं भगवतः पितामहस्यापत्यं हिरण्यबाहुनामानं महानदम्, यं जनाः शोण इति कथयन्ति। दृष्ट्वा च तं रामणीयकहृतहृदया तस्यैव तीरे वासमरोचयत्। उवाच च सावित्रीम्—'सखि, मधुरमयूरविरुतयः कुसुमपांशुपटलसिकतिलतरुतलाः परिमलमत्तमधुपवेणीवीणारणितरमणीया रमयन्ति मां मन्दीकृतमन्दाकीनीद्युतेरस्य महानदस्योपकण्ठभूमयः। पक्षपाति च हृदयमत्रैव स्थातुं मे' इति। अभिनन्दितवचना च तथेति तया तस्य पश्चिमे तीरे समवातरत्। एकस्मिंश्च शुचौ शिलातलसनाथे तटलतामण्डपे गृहबुद्धिं बबन्ध। विश्रान्ता च नातिचिरादुत्थाय सावित्र्या सार्धमुच्चितार्चनकुसुमा सस्नौ। पुलिनपृष्ठप्रतिष्ठापितसैकतशिवलिङ्गा च भक्त्या परमया पञ्चब्रह्मपुरःसरां सम्यङ्मुद्राबन्धविहितपरिकरां ध्रुवागीतिगर्भामवनिपवनवनगगनदहनतपनतुहिनकिरणयजमानमयीमूर्तीरष्टावपि ध्यायन्ती सुचिरमष्टपुष्पिकामदात्। अयत्नोपनतेन फलमूलेनामृतरसमप्यतिशिशयिषमाणेन च स्वादिम्ना शिशिरेण शोणवारिणा शरीरस्थितिमकरोत्। अतिवाहितदिवसा च तस्मिंल्लतामण्डपशिलातले कल्पितपल्लवशयना सुष्वाप। अन्येद्युरप्यनेनैव क्रमेण नक्तन्दिनमत्यवाहयत्।

एवमतिक्रामत्सु दिवसेषु गच्छति च काले कदाचिद्यामममात्रोन्नते च रवावुत्तरस्यां ककुभि प्रतिशब्दपूरितवनगह्वरं गम्भीरतारतरं तुरङ्गहेषितह्रादमश्र-

१ '०वितीर्णतरल०' अ–क. २ 'ग्रहग्रावस्खलन' ब. ३ 'दत्तार्गला०' अ–क. ४ 'हिरण्यवाह' अ–क. ५ 'अरचयत्' अ–क. ६ 'प्रतिष्ठित' अ–क.

णोत् । उपजातकुतूहला च निर्गत्य लतामण्डपाद्विलोकयन्ती विकचकेतकीगर्भपत्रपाण्डुरं रजःसङ्घातं नातिदवीयसि संमुखमापतन्तमपश्यत् । क्रमेण च सामीप्योपजायमानाभिव्यक्ति तस्मिन्महति शफरोदरधूसरे रजसि पयसीव मकरचक्रं प्लवमानं पुरः प्रधावमानेन, प्रलम्बकुटिलकचपल्लवघटितललाटजूटकेन, धवलदन्तपत्रिकाद्युतिहसितकपोलभित्तिना, पिनद्धकृष्णागुरुपङ्कफल्कच्छुरणकृष्णशबलकपायकञ्चुकेन, उत्तरीयकृतशिरोवेष्टनेन, वामप्रकोष्ठनिविष्टस्पष्टहाटककटकेन, द्विगुणपट्टपट्टिकागाढग्रन्थिग्रथितासिधेनुना, अनवरतव्यायामकृशकर्कशशरीरेण, वातहरिणयूथेनेव मुहुर्मुहुः खमुड्डीयमानेन,-लङ्घितसमविषमावटविटपेन, कोणधारिणा, कृपाणपाणिना, सेवागृहीतविविधवनकुसुमफलमूलपर्णेन, 'चल चल, याहि याहि, अपसर्पापसर्प, पुरः प्रयच्छ पन्थानम्' इत्यनवरतकृतकलकलेन, युवप्रायेण, सहस्रमात्रेण पदातिबलेन सनाथमश्ववृन्दं सन्ददर्श ।

मध्ये च तस्य सार्धचन्द्रेण मुक्ताफलजालमालिना विविधरत्नखण्डखचितेन शङ्खक्षीरफेनपाण्डुरेण क्षीरोदेनेव स्वयं लक्ष्मीं दातुमागतेन गगनगतेनातपत्रेण कृतच्छायम्, अच्छाच्छेनाभरणद्युतीनां निवहेन दिशामिव दर्शनानुरागलग्नेन चक्रवालेनानुगम्यमानम्, आनितम्बविलम्बिन्या मालतीशेखरस्रजा सकलभुवनविजयार्जितया रूपपताकयेव विराजमानम्, उत्सर्पिभिः शिखण्डखण्डिका[1]पद्मरागमणेररुणैरंशुजालैरदृश्यमानवनदेवताविधृतैर्बालपल्लवैरिव प्रमृज्यमानमार्गरेणुपरुषवपुषम्[2], बकुलकुड्मलमण्डलीमुण्डमालामण्डनमनोहरेण कुटिलकुन्तलस्तबकमालिना मौलिना मीलितातपं पिबन्तमिव दिवसम्, पशुपतिजटामुकुटमृगाङ्कद्वितीयशकलघटितस्येव सहजलक्ष्मीसमालिङ्गितस्य ललाटपट्टस्य मनःशिलापङ्कपिङ्गलेन लावण्येन लिम्पन्तमिवान्तरिक्षम्, अभिनवयौवनारम्भावष्टम्भप्रगल्भदृष्टिपाततृणीकृतत्रिभुवनस्य चक्षुषः प्रथिम्ना विकचकुमुदकुवलयकमलसरःसहस्रसञ्छादितदशदिशं शरदमिव प्रवर्तयन्तम्, आयतनयननदीसीमान्तसेतुबन्धेन ललाटतटशशिमणिशिलातलगलितेन कान्तिसलिलस्रोतसेव द्राघीयसा घोणावंशेन शोभमानम्, अतिसुरभिसहकारकर्पूरकक्कोललवङ्गपारिजातकपरिमलमुचा मत्तमधुकरकुलकोलाहलमुखरेण मुखेन सनन्दनवनं वसन्तमिव वमन्तम्[3], आसन्नसुहृत्परिहासभावनोत्तानितमुखमुग्धहसितैर्दशनज्योत्स्नास्नपितदिङ्मुखैः पुनःपुनर्नभसि सञ्चारिणं चन्द्रालोकमिव कल्पयन्तम्, कदम्बमुकुलस्थूलमुक्ताफलयुगलमध्याध्यासितमरकतस्य त्रिकण्टककर्णाभरणस्य प्रेङ्खतः प्रभया समुत्सर्पन्त्या कृतसकुसुमहरितकुन्दपल्लवकर्णावतंसमिवोपलक्ष्यमाणम्, आमोदितमृगमदपङ्कलिखितपत्रभङ्गभास्वरं भुजयुगलमुद्दाममकराक्रान्तशिखरमिव म-

---

१ 'गण्डिका' क—ख. २ 'रेणुरूषितपरुष' ख. ३ 'अवतारयन्तम्' ख.

क्रकेतुकेतुदण्डद्वयं दधानम्, धवलब्रह्मसूत्रसीमन्तितं सागरमथनसामर्षगङ्गास्रोतःसन्दानितमिव मन्दरं देहमुद्वहन्तम्, कर्पूरक्षोदमुष्टिच्छुरणपांशुलेनेव कान्तोरुकुचचक्रवाकयुगलविपुलपुलिनेनोरःस्थलेन स्थूलभुजायामपुञ्जितं पुरो विस्तारयन्तमिव दिक्चक्रम्, पुरस्तादीषदधोनाभिनिहितैककोणकमनीयेन पृष्ठतः कक्ष्याधिकक्षिप्तपल्लवेनोभयतः संवलनप्रकटितोरुत्रिभागेन हारीतहरिता निबिडनिपीडितेनाधरवाससा विभज्यमानतनुतरमध्यभागम्, अनवरतश्रमोपचितमांसकठिनविकटमकरमुखसंलग्नजानुभ्यां विशालवक्षःस्थलोपलवेदिकोत्तम्भनशिलास्तम्भाभ्यां चारुचन्दनस्थासकस्थूलकान्तिभ्यामूरुदण्डाभ्यामुपहसन्तमिवैरावतकरायामम्, अतिभरितोरुभारवहनखेदेनेव तनुतरजङ्घाकाण्डम्, कल्पपादपपल्लवद्वयस्येव पाटलस्योभयपार्श्वावलम्बिनः पादद्वयस्य दोलायमानैर्नखमयूखैरश्वमण्डनचामरमालामिव रचयन्तम्, अभिमुखमुच्चैरुद्गच्छद्भिरतिचिरमुपरि विश्राम्यद्भिरिव वलितविकटं पतद्भिः खुरैः खण्डितभुवि प्रतिक्षणदशनैर्ग्रहमुक्तिखणखणायितखरखलीने दीर्घघ्राणैलीनलालिकललाटलुलितचारुचामीकरचक्रके शिञ्जानशातकौम्भजयनशोभिनि मनोरंहसि गोलाङ्गूलकपोलकालकायलोम्नि नीलसिन्धुवारवर्णे वाजिनि महति समारूढम्, उभयतः पर्याणपट्टश्लिष्टहस्ताभ्यामासन्नपरिचारकाभ्यां दोधूयमानधवलचामरिकायुगलम्, अग्रतः पठतो बन्दिनः सुभाषितमुत्कण्टकितकपोलफलकेन लग्नकर्णोत्पलकेसरपक्ष्मशकलेनेव मुखशशिना भावयन्तम्, अनङ्गयुगावतारमिव दर्शयन्तम्, चन्द्रमयीमिव सृष्टिमुत्पादयन्तम्, विलासप्रायमिव जीवलोकं जनयन्तम्, अनुरागमयमिव सर्गान्तरमारचयन्तम्, शृङ्गारमयमिव दिवसमापादयन्तम्, रागराज्यमिव प्रवर्तयन्तम्, आकर्षणाञ्जनमिव चक्षुषोः, वशीकरणमन्त्रमिव मनसः, स्वस्थावेशचूर्णमिवेन्द्रियाणाम्, असन्तोषमिव कौतुकस्य, सिद्धयोगमिव सौभाग्यस्य, पुनर्जन्मदिवसमिव मन्मथस्य, रसायनमिव यौवनस्य, एकराज्यमिव रामणीयकस्य कीर्तिस्तम्भमिव रूपस्य, मूलकोपमिव लावण्यस्य, पुण्यकर्मपरिणाममिव संसारस्य, प्रथमाङ्कुरमिव कान्तिलतायाः, सर्गाभ्यासफलमिव प्रजापतेः; प्रतापमिव विभ्रमस्य, यशःप्रवाहमिव वैदग्ध्यस्य, अष्टादशवर्षदेशीयं युवानमद्राक्षीत्। पार्श्वे च तस्य द्वितीयमपरसंश्लिष्टतुरङ्गम्, प्रांशुमुत्तप्ततपनीयस्तम्भाकारम्, परिणतवयसमपि व्यायामकठिनकायम्, नीचनखश्मश्रुकचम्, शुक्तिखलतिम्, ईषत्तुन्दिलम्, रोमशोरःस्थलम्, अनुल्बणोदारवेशतया जरामपि विनयमिव शिक्षयन्तम्, गुणानपि गरिमाणमिवानयन्तम्, महानुभावतामपि शिष्यतामिवानयन्तम्, आचारस्याचार्यकमिव कुर्वाणम्, धवलवारबाणधारिणम्, धौतदुकूलपट्टिकापरिवेष्टितमौलिं पुरुषम्।

---

१ 'मांसबन्धविकट' ब. २ 'दशनविमुक्त' अ-क. ३ 'घ्राणालीनलालिके ललाटपट्टलुठित' ब. ४ 'कुम्भायान' ब. ५ 'मार्गान्तरमानयन्तम्' अ-क.

अथ स युवा पुरोयायिनां यथादर्शनं प्रतिनिवृत्य विस्मितमनसां कथयतां पदातीनां सकाशादुपलभ्य दिव्याकृति तत्कन्यायुगलमुपजातकुतूहलः प्रतूर्णतुरगो दिदृक्षुस्तं लतामण्डपोद्देशमाजगाम दूरादेव च तुरगादवततार । निवारितपरिजनश्च तेन द्वितीयेन साधुना सह चरणाभ्यामेव सविनयमुपससर्प । कृतोपसंग्रहणौ तौ सावित्री समं सरस्वत्या किसलयासनदानादिना सकुसुमफलार्घावसानेन वनवासोचितेनातिथ्येन यथाक्रममुपजग्राह । आसीनयोश्च तयोरासीना नातिचिरमिव स्थित्वा तं द्वितीयं प्रवयसमुद्दिश्यावादीत्—'आर्य, सहजलज्जाधनस्य प्रमदाजनस्य प्रथमाभिभाषणमशालीनता, विशेषतो वनमृगीमुग्धस्य कुलकुमारीजनस्य । केवलमियमालोकनकृतार्थाय चक्षुषे स्पृहयन्ती प्रेरयत्युदन्तश्रवणकुतूहलिनी श्रोत्रवृत्तिः । प्रथमदर्शने चोपायनमिवोपनयति सज्जनः प्रणयम् । अप्रगल्भमपि जनं प्रभवता प्रश्रयेणार्पितं मनो मध्विव वाचालयति । अयत्नेनैव चातिनम्रे साधौ धनुषीव गुणः परां कोटिमारोपयति विस्रम्भः । जनयन्ति च विस्मयमतिधीरधियामप्यदृष्टपूर्वा दृश्यमाना जगति स्रष्टुः सृष्ट्यतिशयाः, यतस्त्रिभुवनाभिभावि रूपमिदमस्य महानुभावस्य । सौजन्यपरतन्त्रा चेयं देवानांप्रियस्यातिभद्रता कारयति कथां न तु युवतिजने सुलभा तरलता । तत्कथयागमनेनापुण्यभाक्तमो विजृम्भितविरहव्यथः शून्यतां नीतो देशः । क्व वा गन्तव्यम् । कस्य वायमपहृतहरहुङ्काराहङ्कारोऽपर इवानन्यजो युवा । किंनाम्नः समृद्धतपसः पितुरयममृतवर्षी कौस्तुभमणिरिव हरेर्हृदयमाह्लादयति । का चास्य त्रिभुवननमस्या प्रभातसंध्येव महतस्तेजसो जननी । कानि वास्य पुण्यभाञ्जि भजन्त्यभिख्यामक्षराणि । आर्यपरिज्ञानेऽप्ययमेव क्रमः कौतुकानुरोधिनो हृदयस्य' । इत्युक्तवत्यां तस्यां प्रकटितप्रश्रयोऽसौ प्रतिव्याजहार—'आयुष्मति, सतां हि प्रियंवदता कुलविद्या । न केवलमाननं हृदयमपि च ते चन्द्रमयमिव सुधाशीकरशीतलैरानन्दयति वचोभिः । सौजन्यजन्मभूमयो भूयसा शुभेन सज्जननिर्माणशिल्पकल्पा भवादृश्यो जायन्ते । दूरे तावदन्योन्यस्यालापनमभिजातैः सह दृशोऽपि मिश्रीभूता महतीं भूमिमारोपयन्ति । श्रूयताम्—अयं खलु भूषणं भार्गववंशस्य भगवतो भूर्भुवःस्वस्त्रितयतिलकस्य, अदभ्रप्रभावस्तम्भितजम्भारिभुजस्तम्भस्य, सुरासुरमुकुटमणिशिलाशयनदुर्ललितपादपङ्केरुहस्य, निजतेजःप्रसरप्लुष्टपुलोम्नश्च्यवनस्य बहिर्वृत्ति जीवितं दधीचो नाम तनयः । जनन्यस्य जितजगतोऽनेकपार्थिवसहस्रानुयातस्य शर्यातस्य सुता राजपुत्री त्रिभुवनकन्यारत्नं सुकन्या नाम । तां खलु देवीमन्तर्वर्त्नीं विदित्वा वैजनने मासि प्रसवाय पिता पत्युः पार्श्वात्स्वगृहमानाययत् । असूत च सा तत्र देवी

१ 'प्रतीत्य' अ. २ '०नयन्ति सज्जनाः' क. ३ 'कटिमारोहन्ति' ब. ४ 'शिल्पकला इव' ब. ५ 'मिश्रीकृता महतीं...पयन्ति प्रणयम्' ब.

दीर्घायुषमेनम्। अनेहसावर्धत तत्रैवायमानन्दितज्ञातिवर्गो बालस्तारकाराज इव राजीवलोचनो राजगृहे। भर्तृभवनमागच्छन्त्यामपि दुहितरि नासेच-नकदर्शनमिमममुञ्चन्मातामहो मनोविनोदनं नप्तारम्। अशिक्षतायं तत्रैव सर्वा विद्याः सकलाश्च कलाः। कालेन चोपारूढयौवनमिममालोक्याहमिवा-साधप्यनुभवतु मुखकमलावलोकनानन्दमस्येति मातामहः कथंकथमप्येनं पितुरन्तिकमधुना व्यसर्जयत्। मामपि तस्य देवस्य सुगृहीतनाम्नः शर्यात-स्याज्ञाकारिणं विकुक्षिनामानं भृत्यपरमाणुमवधारयतु भवती। पितुः पाद-मूलमायान्तं मया साभिसारमकरोत्स्वामी। तद्धि नः कुलक्रमागतं राजकु-लम्। उत्तमानां च चिरन्तनता जनयत्यनुजीविन्यपि जने कियन्मात्रमपि मन्दाक्षम्। अक्षीणः खलु दाक्षिण्यकोशो महताम्। इतश्च गव्यूतिमात्र-मिव पारेशोणं तस्य भगवतश्च्यवनस्य स्वनाम्ना निर्मितव्यपदेशं च्यावनं नाम चैत्ररथकल्पं काननं निवासः। तदवधिश्चेयं नौ यात्रा। यदि च गृहीत-क्षणं दाक्षिण्यमनवहेलं वा हृदयमस्माकमुपरि भूमिर्वा प्रसादानामयं जनः श्रवणार्हो वा, ततो न विमाननीयोऽयं नः प्रथमः प्रणयः कुतूहलस्य। वयमपि शुश्रूषवो वृत्तान्तमायुष्मत्योः। नेयमाकृतिर्दिव्यतां व्यभिचरति। गोत्रनामनी तु श्रोतुमभिलषति नौ हृदयम्। तत्कथय कतमो वंशः स्पृहणीयतां जन्मना नीतः। का चेयमत्रभवती भवत्याः समीपे सम-वाय इव विरोधिनां पदार्थानाम्। तथा हि। सन्निहितबालान्धकारा भास्वन्मूर्तिश्च, पुण्डरीकमुखी हरिणलोचना च, बालातपप्रभाधरा कुमु-दहासिनी च, कलहंसस्वना समुन्नतपयोधरा च, कमलकोमलकरा हिम-गिरिशिलापृथुनितम्बा च, करभोरुर्विलम्बितगमना च, अमुक्तकुमारभावा स्निग्धतारका च' इति। सा त्ववादीत्—'आर्य, श्रोष्यसि कालेन। भूयसो दिवसानत्र स्थातुमभिलषति नौ हृदयम्। अल्पीयांश्चायमध्वा। परिचय एव प्रकटीकरिष्यति। आर्येण न विस्मरणीयोऽयमनुषङ्गदृष्टो जनः' इत्यभि-धाय तूष्णीमभूत्। दधीचस्तु नवाम्भोभरगम्भीराम्भोधरध्वाननिभया भारत्या नर्तयन्वनलताभवनभाजो भुजगभुजः सुधीरमुवाच—'आर्ये, करि-ष्यति प्रसादमार्याराध्यमाना। पश्यामस्तावत्तातम्। उत्तिष्ठ। व्रजामः' इति। तथेति च तेनाभ्यनुज्ञातः शनैरुत्थाय कृतनमस्कृतिरुच्चचाल। तुरगारूढं च तं प्रयान्तं सरस्वती सुचिरमुत्तम्भितपक्ष्मणा निश्चलतारकेण लिखितेनेव चक्षुषा व्यलोकयत्। उत्तीर्य शोणमचिरेणैव कालेन दधीचः पितुराश्रमपदं जगाम। गते च तस्मिन्सा तामेव दिशमालोकयन्ती सुचिरमतिष्ठत्। कृच्छ्रादिव च संजहार दृशम्।

अथ मुहूर्तमिव स्थित्वा स्मृत्वा च तां तस्य रूपसम्पदं पुनः पुनर्ध्यैस-यतास्या हृदयम्। भूयोऽपि चक्षुराचकाङ्क्ष तद्दर्शनम्। अवज्ञेव केनाप्य-

नीयत तामेव दिशं दृष्टिः । अप्रहितमपि मनस्तेनैव सार्धमगात् । अजायत च नवपल्लव इव बालवनलतायाः कुतोऽप्यस्या अनुरागश्चेतसि । ततः प्रभृति सालस्येव शून्येव सनिद्रेव दिवसमनयत् । अस्तमुपयाति च प्रत्यवपर्यस्तमण्डले लाङ्गलिकास्तबकताम्रत्विषि कमलिनीकामुके कठोरसारसशिरःशोणशोचिषि सावित्रे त्रयीमये तेजसि, तरुणतरतमालश्यामले च मलिनयति व्योम व्योमव्यापिनि तिमिरसञ्चये, सञ्चरत्सिद्धसुन्दरीनूपुररवानुसारिणि च मन्दं मन्दं मन्दाकिनीहंस इव समुत्सर्पति शशिनि गगनतलम्, कृतसंध्याप्रणामा निशामुख एव निपत्य विमुक्ताङ्गी पल्लवशयने तस्थौ । सावित्र्यपि कृत्वा यथाक्रियमाणं सायन्तनं क्रियाकलापमुचिते शयनकाले किसलयशयनमभजत । जातनिद्रा च सुष्वाप ।

इतरा तु मुहुर्मुहुरङ्गवलनैर्विलुलितकिसलयशयनतला निमीलितलोचनापि नाभजत निद्राम् । अचिन्तयच्च—'मर्त्यलोकः खलु सर्वलोकानामुपरि, यस्मिन्नेवंविधानि सम्भवन्ति त्रिभुवनभूषणानि सकलगुणग्रामगुरूणि रत्नानि । तथा हि । तस्य मुखलावण्यप्रवाहस्य निष्यन्दबिन्दुरिन्दुः । तस्य च चक्षुषो विक्षेपा विकचकुमुदकुवलयकमलाकराः । तस्य चाधरमणेर्दीधितयो विकसितबन्धूकवनराजयः । तस्य चाङ्गस्य परभागोपकरणमनङ्गः । पुण्यभाञ्जि तानि चक्षूंषि चेतांसि यौवनानि वा स्त्रैणानि, येषामसौ विषयो[1] दर्शनस्य । क्षणं तु दर्शयता च तमन्यजन्मजनितेनेव मे फलितमधर्मेण । का प्रतिपत्तिरिदानीम्' इति चिन्तयन्त्येव कथंकथमप्युपजातनिद्रा चिरात्क्षणमशेत । सुप्ता च तं दीर्घलोचनं स्वप्ने ददर्श । स्वप्नासादितद्वितीयदर्शना चाकर्णाकृष्टकार्मुकेण मनसि निर्दयमताड्यत[2] प्रतिबुद्धा मकरकेतुना । मदनशरताडितायाश्च तस्या वार्तामिवोपलब्धुमरतिराजगाम । तथा हि । ततः प्रभृति कुसुमधूलिधवलाभिर्वनलताभिरताडितापि वेदनामधत्त । मन्दमन्दमारुतविधुतैः कुसुमरजोभिरदूषितलोचनाप्यश्रुजलं मुमोच । हंसपक्षतालवृन्तैवान्तव्रातवितते[3]ः शोणशीकरैरसिक्ताप्यार्द्रतामगात् । प्रेङ्खत्कादम्बमिथुनैरनूढा[4]प्यघूर्णत वनकमलिनीकल्लोलदोलाभिः । विघटमानचक्रवाकयुगलविसृष्टैरस्पृष्टापि श्यामतामाससाद विरहिनिःश्वासधूमैः । पुष्पधूलिधूसरैरदष्टापि व्यचेष्टत मधुकरकुलैः ।

अथ गणरात्रापगमे निवर्तमानस्तेनैव वर्त्मना तं देशमागत्य तथैव निवारितपरिजनश्छत्रधारद्वितीयो विकुक्षिर्दधीचं । सरस्वती तु तं दूरादेव संमुखमागच्छन्तं प्रीत्या ससंभ्रममुत्थाय वनमृगीवोद्ग्रीवा विलोकयन्ती मार्गपरिश्रान्तमस्नपयदिव धवलितदशदिशा दृशा । कृतासनपरिग्रहं तु तं प्रीत्या सावित्री पप्रच्छ—'आर्य, कच्चित्कुशली कुमारः' इति । सोऽब्रवीत्—

---

१ 'येषामसावविषयः' ब. २ 'अताड्यत मकरकेतुना प्रतिबुद्धाया मदन०' अ–क.
३ '०वृन्तव्रात' अ–क. ४ 'मिथुनाभिरनूढा' अ–ब.

'आयुष्मति, कुशली। स्मरति च भवत्योः। केवलममीषु दिवसेषु तनीयसीमिव तनुं बिभर्ति। अविज्ञायमानां चानिमित्तां शून्यतामिवाधत्ते। अपि च। अन्वे[1]क्षमागमिष्यत्येव मालतीति नाम्ना वाणिनी वार्तां वो विज्ञातुम्। उच्छ्वसितं सा कुमारस्य' इति। तच्छ्रुत्वा पुनरपि सावित्री समभाषत—'अतिमहानुभावः खलु कुमारो यदेवमविज्ञायमाने क्षणदृष्टेऽपि जने परिचितिमनुबध्नाति। तस्य हि गच्छतो यदृच्छया कथमप्यंशुकमिव मार्गलतासु मानसमस्मासु मुहूर्तमासक्तमासीत्। अशून्यं हि सौजन्यमाभिजात्येन वः स्वामिसूनोः। अलसः खलु लोको यदेवं सुलभसौहार्दानि येनकेनचिन्न क्रीणाति महतां मनांसि। सोऽयमौदार्यातिशयः कोऽपि महात्मनामितरजनदुर्लभो येनोपकरणीकुर्वन्ति त्रिभुवनम्' इति। विकुक्षिरुच्चावचैरालापैः सुचिरमिव स्थित्वा यथाभिलषितं देशमयासीत्।

अपरेद्युरुद्यति भगवति द्युमणावुद्दामद्युतावभिद्रुततारके तिरस्कृततमसि तामरस[2]व्यासव्यसनिनि सहस्ररश्मौ शोणमुत्तीर्यायान्ती, तरलदेहप्रभावितानच्छलेनात्यच्छं सकलं शोणसलिलमिवानयन्ती, स्फुटितातिमुक्तककुसुमस्तबकसमत्विषि सटाले महति मृगपताविव गौरी तुरङ्गमे स्थिता, सलीलमुरो[3]बन्धारोपितस्य तिर्यगुत्कर्णतुरगाकर्ण्यमाननूपुरपटुरणितस्यातिबहलेन पिण्डालक्तकेन पल्लवितस्य कुङ्कुमपिञ्जरितपृष्ठस्य चरणयुगलस्य प्रसरद्भिरतिलोहितैः प्रभाप्रवाहैरुभयतस्ताडनदोहदलोभागतानि किसलयितानि रक्ताशोकवनानीवाकर्षयन्ती, सकलजीवलोकहृदयहठहरणाघोषणयेव रशनया शिञ्जानजघनस्थला, धौतधवलनेत्रनिर्मितेन निर्मोकलघुतरेणाप्रपदीनेन कञ्चुकेन तिरोहिततनुलता, छातकञ्चुकान्तरदृश्यमानैराश्यानचन्दनधवलैरवयवैः स्वच्छसलिलाभ्यन्तरविभाव्यमानमृणालकाण्डेव सरसी, कुसुम्भरागपाटलं पुलकबन्धचित्रं चण्डातकमन्तः[4]स्फुटं स्फटिकभूमिरिव रत्ननिधानमादधाना, हारेणामलकीफलनिस्[5]तलमुक्ताफलेन स्फुरितस्थूलग्रहगणशारा शारदीव श्वेतविरलजलधरपटलावृता द्यौः, कुचपूर्णकलशयोरुपरि रत्नप्रालम्बमालिकामरुणहरितकिरणकिसलयिनीं कस्यापि पुण्यवतो हृदयप्रवेश[6]वनमालिकामिव बद्धां धारयन्ती, प्रकोष्ठनिविष्टस्यैकैकस्य हा[7]टककटकस्य मरकतमकरवेदिकासनाथस्य हरितीकृतदिगन्ताभिर्मयूखसन्ततिभिः स्थलकमलिनीभिरिव लक्ष्मीशङ्कयानुगम्यमाना, बहलताम्बूलकृष्णिकान्धकारितेनाधरसम्पुटेन मुखशशिपीतं ससंध्यारागं तिमिरमिव वमन्ती, विकचनयनकुवलयकुतूहलालीनयालिकुलसंहत्या नीलांशुकजालिकयेव निरुद्धार्धवदना, नीलीरागनिहितनीलिम्ना शि[8]खिगलशितिना वामश्रवणाश्रयिणा दन्तपत्रेण कालमेघपल्लवेन विद्यु-

१ 'अन्वक्षसमागमिष्यत्येव' क. २ 'तामरसव्याकोश०' क. ३ 'उरोबन्धारोपित०' ब. ४ 'अन्तःस्फुरस्फटिक' ब. ५ 'निस्तुल०' अ. ६ 'वन्दनमालिका०' ब. ७ 'प्रवाल०' ब. ८ 'शिति' अ-क.

दिव द्योतमाना, बकुलफलानुकारिणीभिस्त्रिसृभिर्मुक्ताभिः कल्पितेन बालिकायुगलेनाधोमुखेनालोकजलवर्षिणा सिञ्चन्तीवातिकोमले भुजलते, दक्षिणकर्णावतंसितया केतकीगर्भपलाशलेखया रजनिकरजिह्वालतयेव लावण्यलोभेन लिह्यमानकपोलतला, तमालश्यामलेन मृगमदामोदनिष्यन्दिना तिलकबिन्दुना मुद्रितमिव मनोभवसर्वस्वं वदनमुद्वहन्ती, ललाटलासकस्य सीमन्तचुम्बिनश्चटुलतिलकमणेरुदञ्चता[1] चटुलेनांशुजालेन रक्तांशुकेनेव कृतशिरोवगुण्ठना, पृष्ठप्रेङ्खदनादरसंयमनशिथिलजूटिकाबन्धा नीलचामरावचूलिनीव चूडामणिमकरिकासनाथा मकरकेतुकेतुपताका, कुलदेवतेव चन्द्रमसः, पुनःसञ्जीवनौषधिरिव पुष्पधनुषः, वेलेव रागसागरस्य, ज्योत्स्नेव यौवनचन्द्रोदयस्य, महानदीव रतिरसामृतस्य, कुसुमोद्गतिरिव सुरततरोः, बालविद्येव वैदग्ध्यस्य, कौमुदीव कान्तेः, धृतिरिव धैर्यस्य, गुरुशालेव गौरवस्य, बीजभूमिरिव विनयस्य, गोष्ठीव गुणानाम्, मनस्वितेव महानुभावतायाः, तृप्तिरिव तारुण्यस्य, कुवलयदलदामदीर्घलोचनया पाटलाधरया कुन्दकुड्मलस्फुटदशनया शिरीषमालासुकुमारभुजयुगलया कमलकोमलकरया बकुलसुरभिनिःश्वसितया चम्पकावदातया कुसुममय्येव ताम्बूलकरङ्कवाहिन्या महाप्रमाणाश्वतरारूढयानुगम्यमाना, कतिपयपरिचारकपरिकरा मालती समदृश्यत । दूरादेव च दधीचप्रेम्णा सरस्वत्या लुण्ठितेव मनोरथैः, आकृष्टेव कुतूहलेन, प्रत्युद्गतेवोत्कलिकाभिः, आलिङ्गितेवोत्कण्ठया, अन्तःप्रवेशितेव हृदयेन, स्नपितेवानन्दाश्रुभिः, विलुप्तेव स्मितेन, वीजितेवोच्छ्वसितैः, आच्छादितेव चक्षुषा, अभ्यर्चितेव वदनपुण्डरीकेण, सखीकृतेवाशया सविधमुपययौ । अवतीर्य च तुरगाद्दूरादेवावनतेन मूर्ध्ना प्रणाममकरोत् । आलिङ्गिता च ताभ्यां सविनयमुपाविशत् । सप्रश्रयं ताभ्यां सम्भाषिता च पुण्यभाजमात्मानममन्यत । अकथयच्च दधीचसन्दिष्टं शिरसि विनिहितेनाञ्जलिना नमस्कारम् । अगृह्णाच्चाकारतः प्रभृत्यग्राम्यतया तैस्तैरपि पेशलैरालापैः सावित्रीसरस्वत्योर्मनसी ।

क्रमेण चातीते मध्यन्दिनसमये शोणमवतीर्णायां सावित्र्यां स्नातुमुत्सारितपरिजना साकूता मालती कुसुमप्रस्तरशायिनीं समुपसृत्य सरस्वतीमाबभाषे—'देवि, विज्ञप्यं नः किञ्चिदस्ति रहसि । अतो मुहूर्तमवधानदानेन प्रसादं क्रियमाणमिच्छामि' इति । सरस्वती तु दधीचसन्देशाशङ्किनी किं वक्ष्यतीति स्तनविनिहितवामकरनखकिरणदन्तुरितमुद्भिद्यमानकुतूहलाङ्कुरनिकरमिव हृदयमुत्तरीयदुकूलवल्कलैकदेशेन सञ्छादयन्ती, गलतावतंसपल्लवेन श्रोतुं श्रवणेनेव धावमानेनानवरतश्वाससन्दोहदोलायितां जीविताशामिव समासन्नलतामवलम्बमाना, समुत्फुल्लस्य मुखशशिनो लावण्यप्रवाहेण शृङ्गाररसेनेव प्लावयन्ती जीवलोकम्, शयनकुसुमपरिमललग्नैर्मधुकरकदम्बकैर्म-

१ 'चटुलातिलक' अ–क.

दनानलदाहश्यामलैर्मनोरथैरिव निर्गत्य मूर्तैरुत्क्षिप्यमाणा, कुसुमशयनीयात्स्मरशरसंज्वरिणी मन्दं मन्दमुदगात्। 'उपांशु कथय' इति कपोलतलप्रतिबिम्बितां लज्जयेव कर्णमूलं मालतीं प्रवेशयन्ती मधुरया गिरा सुधीरमुवाच—'सखि मालति किमर्थमेवमभिदधासि। काहमवधानदानस्य शरीरस्य प्राणानां वा। सर्वस्यापार्थितोऽपि प्रभवत्येवातिवेलं चक्षुष्यो जनः। सा न काचिद्या न भवसि मे स्वसा सखी प्रणयिनी प्राणसमा च। नियुज्यतां यावतः कार्यस्य क्षमं क्षोदीयसो गरीयसो वा शरीरकमिदम्। अनवस्करमाश्रवं मे त्वयि हृदयम्। प्रीत्या प्रतिसरा विधेयास्मि ते। व्यावृणु वरवर्णिनि विवक्षितम्' इति। सा त्ववादीत्—'देवि, जानास्येव माधुर्यं विषयाणाम्, लोलुपतां चेन्द्रियग्रामस्य, उन्मादितां च नवयौवनस्य, पारिप्लवतां च मनसः। प्रख्यातैव मन्मथस्य दुर्निवारता। अतो न मामुपालम्भेनोपस्थातुमर्हसि। न च बालिशता चपलता चारणता वा वाचालतायाः कारणम्। न किंचिन्न कारयत्यसाधारणा स्वामिभक्तिः। सा त्वं देवि यदैव दृष्टासि देवेन तत एवारभ्यास्य कामो गुरुः, चन्द्रमा जीवितेशः, मलयमरुदुच्छ्वासहेतुः, आधयोऽन्तरङ्गस्थानेषु, सन्तापः परमसुहृत्, प्रजागर आप्तः, मनोरथाः सर्वगताः, निःश्वासा विग्रहाग्रेसराः, मृत्युः पार्श्ववर्ती, रणरणकः सञ्चारकः, सङ्कल्पा बुद्ध्युपदेशवृद्धाः। किं वा विज्ञापयामि। अनुरूपो देव्या इत्यात्मसम्भावना, शीलवानिति प्रक्रमविरुद्धम्, धीर इत्यवस्थाविपरीतम्, सुभग इति त्वदायत्तम्, स्थिरप्रीतिरिति निपुणोपक्षेपः, जानाति सेवितुमित्यस्वामिभावोचितम्, इच्छति दासभावमामरणात्कर्तुमिति धूर्तालापः, भवनस्वामिनी भवसीत्युपप्रलोभनम्, पुण्यभागिनी भजति भर्तारं तादृशमिति स्वामिपक्षपातः, त्वं तस्य मृत्युरित्यप्रियम्, अगुणज्ञासीत्यधिक्षेपः, स्वप्नेऽस्य बहुशः कृतप्रसादासीत्यसाक्षिकम्, प्राणरक्षार्थमर्थयत इति कातरता, तत्रागम्यतामित्याज्ञा, वारितोऽपि बलादागच्छतीति परिभवः। तदेवमगोचरे गिरामसीति श्रुत्वा देवी प्रमाणम्' इत्यभिधाय तूष्णीमभूत्।

अथ सरस्वती प्रीतिविस्फारितेन चक्षुषा प्रत्यवादीत्—'अयि, न शक्नोमि बहु भाषितुम्। एषास्मि ते स्मितवादिनि वचसि स्थिता। गृह्यन्ताममी प्राणाः' इति। मालती तु 'यदाज्ञापयस्यतिप्रसादः' इति व्याहृत्य प्रहर्षपरवशा प्रणम्य प्रजविना तुरगेण ततार शोणम्। अगाच्च दधीचमानेतुं च्यवनाश्रमपदम्। इतरा तु सखीस्नेहेन सावित्रीमपि विदितवृत्तान्तामकरोत्। उत्कण्ठाभारभृता च ताम्यता चेतसा कल्पायितं कथंकथमपि दिवसशेषमनैषीत्। अस्तमुपगतवति भगवति गभस्तिमति, स्तिमिततरमवतरति तमसि, प्रहसितामिव सितां दिशं पौरन्दरीं दरीमिव केसरिणि मुञ्चति चन्द्रमसि,

---

१ 'प्रार्थितेऽपि' ब. २ 'प्रभवत्येवातिपेशलः' क-ब. ३ 'प्रतिसरास्मि ते' ब. ४ 'देव' ब. ५ 'यथाज्ञापयिष्यसि प्रसादः' ब.

सरस्वती शुचिनि चीनांशुकसुकुमारे तरङ्गिणि दुकूलकोमले शयन इव शोण- सैकते समुपविष्टा स्वप्नकृतप्रार्थनापादपतनलग्नां दधीचचरणनखचन्द्रिकामिव ललाटिकां दधाना, गण्डस्थलादर्शप्रतिबिम्बितेन 'चारुहासिनि, अयमसा- वाहूतो हृदयदयितो जनः' इति श्रवणसमीपवर्तिना निवेद्यमानमदनसन्दे- शेवेन्दुना, विकीर्यमाणनखकिरणचक्रवालेन बालव्यजनीकृतचन्द्रकलाकला-[1] पेनेव करेण वीजयन्ती स्वेदिनं स्पष्टकपोलपट्टम्, 'अत्र दधीचादृते न केनचित्प्र- वेष्टव्यम्' इति तिरश्चीनं चित्तभुवा पातितां विलासवेत्रलतामिव बालमृणा- लिकामधिस्तनं स्तनयन्ती[2] कथमपि हृदयेन वहन्ती प्रतिपालयामास । आसीच्चास्या मनसि—'अहमपि नाम सरस्वती यत्रामुना मनोजन्मना जघन्येव[3] परवशीकृता । तत्र का गणनेतरासु तपस्विनीष्वतितरलासु तरुणीषु' इति ।

आजगाम च मधुमास इव सुरभिगन्धवहः, हंस इव कृतमृणालधृतिः[4], शिखण्डीव घनप्रीत्युन्मुखः, मलयानिल इवाहितसरसचन्दनधवलतनुलतो- त्कम्पः, कृष्यमाण इव कृतकरकचग्रहेण ग्रहपतिना, प्रेर्यमाण इव कन्द- र्पोद्दीपनदक्षेण दक्षिणानिलेन, उह्यमान इवोत्कलिकाबहुलेन रतिरसेन, परि- मलसम्पातिना मधुपपटलेन पटेनेव नीलेनाच्छादिताङ्गयष्टिः, अन्तःस्फुरत मत्तमदनकरिकर्णशङ्खायमानेन प्रतिमेन्दुना प्रथमसमागमविलासविलक्षस्मि- तेनेव धवलीक्रियमाणैककपोलोदरो मालतीद्वितीयो दधीचः । आगत्य च हृदयगतदयितानूपुररवमिश्रयेव हंसगद्गदया गिरा कृतसम्भाषणो यथा मन्मथः समाज्ञापयति, यथा यौवनमुपदिशति, यथानुरागः शिक्षयति, यथा विदग्धताध्यापयति, तथा तामभिरामां रामामरमयत् । उपजातविस्रम्भा चात्मानमकथयदस्य सरस्वती । तेन[5] तु सार्धमेकं दिवसमिवानयत्संवत्स- रमधिकम् ।

अथ दैवयोगात्सरस्वती बभार गर्भम् । असूत चानेहसा सर्वलक्षणाभि- रामं तनयम् । तस्मै च जातमात्रायैव 'सम्यक्सरहस्याः सर्वे वेदाः सर्वाणि च शास्त्राणि सकलाश्च कलाः मत्प्रसादात्स्वयमाविर्भविष्यन्ति' इति वरम- दात् । सद्भर्तृश्लाघया दर्शयितुमिव हृदयेनादाय दधीचं पितामहादेशात्समं सावित्र्या ब्रह्मलोकमारुरोह । गतायां च तस्यां दधीचोऽपि हृदये ह्रादिन्येवा- भिहतो भार्गववंशसम्भूतस्य भ्रातुर्ब्राह्मणस्य जायामक्षमालाभिधानां मुनिकन्य- कामात्मसूनोः संवर्धनाय नियुज्य विरहातुरस्तपसे वनमगात् । यस्मिन्नेवावसरे सरस्वत्यसूत तनयं तस्मिन्नेवाक्षमालापि सुतं प्रसूतवती । तौ तु सा निर्विशेषं सामान्यस्तन्या शनैः शनैः शिशू समवर्धयत् । एकस्तयोः सारस्वताख्य

१ 'कृतचन्द्रकरेणेव करेण' ब. २ 'स्तनयन्तीम्' क; 'स्तनन्ती' ब. ३ 'जान- त्येव' ब. ४ 'धृतिः' ब. ५ 'तया' अ—क.

एवाभवत्, द्वितीयोऽपि वत्सनामाभवत् । आसीच्च तयोः सोदर्ययोरिव स्पृहणीया प्रीतिः ।

अथ सारस्वतो मातुर्महिम्ना यौवनारम्भ एवाविर्भूताशेषविद्यासम्भारस्तस्मिन्सवयसि भ्रातरि प्रेयसि प्राणसमे सुहृदि वत्से वाङ्मयं समस्तमेव सञ्चारयामास । चकार च कृतदारपरिग्रहस्यास्य तस्मिन्नेव प्रदेशे प्रीत्या प्रीतिकूटनामानं निवासम् । आत्मनाप्याषाढी, कृष्णाजिनी, वल्कली, अक्षवलयी, मेखली, जटी च भूत्वा तपस्यतो जनयितुरेव जगामान्तिकम् ।

अथ तस्मात्प्रवर्धमानादिपुरुषजनितात्मचरणोन्नतिनिर्गतप्रघोषः, परमेश्वरशिरोधृतः, सकलकलागमगम्भीरः, महामुनिमान्यः, विपक्षक्षोभक्षमः, क्षितितललब्धायतिः, अस्खलितप्रवृत्तो भागीरथीप्रवाह इव पावनः प्रावर्तत विपुलो वंशः । यस्मादजायन्त वात्स्यायना नाम गृहमुनयः, आश्रितश्रौता अप्यनालम्बितालीकबकककाकवः, कृतकुकुटवृत्ता अप्यबैडालवृत्तयः, विवर्जितजनपङ्क्तयः, परिहृतकपटकौरकुचीकूर्चाकूताः, अगृहीतगह्वराः, न्यक्कृतनिकृतयः, प्रसन्नप्रकृतयः, विगतविकृतयः, परपरिवादपराचीनचेतसः, वर्णत्रयव्यावृत्तिविशुद्धान्धसः, धीरधिषणावधृताध्येषणाः, असङ्कसुकस्वभावाः, प्रणतप्रणयिनः, शमितसमस्तशाखान्तरसंशीतयः, उद्घाटितसमग्रग्रन्थार्थग्रन्थयः, कवयः, वाग्मिनः, विमत्सराः, परसंभाषितव्यसनिनः, विदग्धपरिहासवेदिनः, परिचयपेशलाः, नृत्यगीतवादित्रेष्वबाह्याः, ऐतिह्यस्यावितृष्णाः, सानुक्रोशाः, सत्यशुचयः, साधुसंमताः, सर्वसत्त्वसौहार्दद्रवार्द्रहृदयाः, तथा सर्वगुणोपेता राजसेनानभिभूताः, क्षमाभाज आश्रितनन्दनाः, अनिस्त्रिंशा विद्याधराः, अजडाः कलावन्तः, अदोषास्तारकाः, अपरोपतापिनो भास्वन्तः, अनुष्माणो हुतभुजः, अकुसृतयोऽभोगिनः, अस्तम्भाः पुण्यालयाः, अलुप्तक्रतुक्रिया दक्षाः, अव्यालाः कामजितः, असाधारणा द्विजातयः ।

तेषु चैवमुत्पद्यमानेषु, संसरति संसारे, यात्सु युगेषु, अवतीर्णे कलौ, वहत्सु वत्सरेषु, व्रजत्सु वासरेषु, अतिक्रामति च काले, प्रसवपरम्पराभिरनवरतमापतति विकाशिनि वात्स्यायनकुले, क्रमेण कुबेरनामा वैनतेय इव गुरुपक्षपाती द्विजो जन्म लेभे । तस्याभवन्नच्युत ईशानो हरः पाशुपतश्चेति चत्वारो युगारम्भा इव ब्रह्मतेजोजन्यमानप्रजाविस्तारा नारायणबाहुदण्डा इव सचक्रनन्दकास्तनयाः । तत्र पाशुपतस्यैक एवाभवद्भूभार इवाचलकुलस्थितिश्चतुरुदधिगम्भीरोऽर्थपतिरिति नाम्ना समग्राग्रजन्मचक्रचूडामणिर्महात्मा सूनुः । सोऽजनयद्भृगुं हंसं शुचिं कविं महीदत्तं धर्मं जातवेदसं

१ 'वत्सात्' ब. २ 'विमल:' ब. ३ 'कौर' क; 'कौरु' ब. ४ '०धिषणा विधूताध्येषणा' ब. ५ 'परसुभाषित०' ब.

चित्रभानुं त्र्यक्षमहिदत्तं विश्वरूपं चेत्येकादश रुद्रानिव सोमामृतरसशीकरच्छुरितमुखान्पवित्रान्पुत्रान् । अलभत च चित्रभानुस्तेषां मध्ये राजदेव्यभिधानायां ब्राह्मण्यां बाणमात्मजम् । स बाल एव विधेर्बलवतो वशादुपसम्पन्नया व्ययुज्यत जनन्या । जातस्नेहस्तु नितरां पितैवास्य मातृतामकरोत् । अवर्धत च तेनाधिकतरमेधीयमानधृतिर्धाम्नि निजे ।

कृतोपनयनादिक्रियाकलापस्य समावृत्तस्य चतुर्दशवर्षदेशीयस्य पितापि श्रुतिस्मृतिविहितं कृत्वा द्विजजनोचितं निखिलं पुण्यजातं कालेनादशमीस्थ एवास्तमगात् । संस्थिते च पितरि महता शोकेनाभीलमनुप्राप्तो दिवानिशं दह्यमानहृदयः कथंकथमपि कतिपयान्दिवसानात्मगृह एवानैषीत् । गते च विरलतां शोके शनैः शनैरविनयनिदानतया स्वातन्त्र्यस्य, कुतूहलबहलतया च बालभावस्य, धैर्यप्रतिपक्षतया च यौवनारम्भस्य, शैशवोचितान्यनेकानि चापलान्याचरन्नित्वरो बभूव । अभवंश्चास्य वयसा समानाः सुहृदः सहायाश्च । तथा च । भ्रातरौ पारशवौ चन्द्रसेनमातृषेणौ, भाषाकविरीशानः परं मित्रम्, प्रणयिनौ रुद्रनारायणौ, विद्वांसौ वारबाणवासबाणौ, वर्णकविर्वेणीभारतः, प्राकृतकृत्कुलपुत्रो वायुविकारः, बन्दिनावनङ्गबाणसूचीबाणौ, कात्यायनिका चक्रवाकिका, जाङ्गुलिको मयूरकः, ताम्बूलदायकश्चण्डकः, भिषक्पुत्रो मन्दारकः, पुस्तकवाचकः सुदृष्टिः, कलादश्चामीकरः, हैरिकः सिन्धुषेणः, लेखको गोविन्दकः, चित्रकृद्वीरवर्मा, पुस्तकृत्कुमारदत्तः, मार्दङ्गिको जीमूतः, गायनौ सोमिलग्रहादित्यौ, सैरन्ध्री कुरङ्गिका, वांशिकौ मधुकरपारावतौ, गान्धर्वोपाध्यायो दर्दुरकः, संवाहिका केरलिका, लासकयुवा ताण्डविकः, आक्षिक आखण्डलः, कितवो भीमकः, शैलालियुवा शिखण्डकः, नर्तकी हरिणिका, पाराशरी सुमतिः, क्षपणको वीरदेवः, कथको जयसेनः, शैवो वक्रघोणः, मन्त्रसाधकः करालः, असुरविवरव्यसनी लोहिताक्षः, धातुवादविद्विहङ्गमः, दार्दुरिको दामोदरः, ऐन्द्रजालिकश्चकोराक्षः, मस्करी ताम्रचूडः । स एतैश्चान्यैश्चानुगम्यमानो बालतया निघ्नतामुपगतो देशान्तरालोकनकौतुकाक्षिप्तहृदयः सत्स्वपि पितृपितामहोपात्तेषु ब्राह्मणजनोचितेषु विभवेषु सति चाविच्छिन्ने विद्याप्रसङ्गे गृहान्निरगात् । अगाच्च निरवग्रहो ग्रहवानिव नवयौवनेन स्वैरिणा मनसा महतामुपहास्यताम् ।

अथ शनैः शनैरत्युदारव्यवहृतिमनोहन्ति बृहन्ति राजकुलानि वीक्षमाणः, निरवद्यविद्याविद्योतितानि च गुरुकुलानि सेवमानः, महार्हालापगम्भीरगुणवद्गोष्ठीश्चोपतिष्ठमानः, स्वभावगम्भीरधीधनानि विदग्धमण्ड-

१ 'त्र्यक्षं महिदत्तम्' ब. २ 'आधीयमान०' ब. ३ 'सवयसः समानाः' ब. ४ 'कविरीशानः' ब. ५ 'वासबाणौ' ब. ६ 'मायूरकः' ब. ७ 'सिद्धसेनः' ब. ८ 'दार्दरिकः' ब. ९ 'यौवनस्वैरिणा' ब. १० '०धीधनानि' ब-अ.

ग्लानि च गाहमानः, पुनरपि तामेव वैपश्चितीमात्मवंशोचितां प्रकृतिमभजत् । महतश्च कालात्तामेव भूयो वात्स्यायनवंशाश्रयामात्मनो जन्मभुवं ब्राह्मणाधिवासमगमत् । तत्र च चिरदर्शनादभिनवीभूतस्नेहसद्भावैः ससंस्तवप्रकटितज्ञातेयैराप्तैरुत्सवदिवस इवाभिनन्दिताभिगमनो बालमित्रमण्डलस्य मध्यगतो मोक्षसुखमिवान्वभवदिति ।

इति श्रीबाणभट्टकृतौ हर्षचरिते वात्स्यायनवंशवर्णनं नाम प्रथम उच्छ्वासः ।



१ 'ससंभ्रम०' क; 'संस्तवप्रकटित' ख. २ 'इति श्रीमहाकविचक्रचूडामणिश्रीबाणभट्टविरचिते हर्षचरिते महाकाव्ये वात्स्यायनवंशवर्णनं नाम प्रथम उच्छ्वासः सम्पूर्णः' ख.

# द्वितीय उच्छ्वासः ।

अतिगम्भीरे भूपे कूप इव जनस्य निरवतारस्य ।
दधति समीहितसिद्धिं गुणवन्तः पार्थिवा घटकाः ॥ १ ॥
रागिणि नलिने लक्ष्मीं दिवसो निदधाति दिनकरप्रभवाम् ।
अनपेक्षितगुणदोषः परोपकारः सतां व्यसनम् ॥ २ ॥

अथ तत्रानवरताध्ययनध्वनिमुखराणि, भस्मपुण्ड्रकपाण्डुरललाटैः कपिलशिखाजालजटिलैः कृशानुभिरिव क्रतुलोभागतैर्बटुभिरध्यास्यमानानि, सेकसुकुमारसोमकेदारिकाहरितायमानप्रघनानि, कृष्णाजिनविकीर्णशुष्यत्पुरोडाशीयश्यामाकतण्डुलानि, बालिकाविकीर्यमाणनीवारबलीनि, शुचिशिष्यशतानीयमानहरितकुशपूलीपलाशसमिन्धि, इन्धनगोमयपिण्डकूटसङ्कटानि, आमिक्षीयक्षीरक्षारिणीनामग्निहोत्रधेनूनां खुरवलयैर्विलिखिताजिरवितर्दिकानि, [1]कमण्डलव्यमृत्पिण्डमर्दनव्यग्रयतिजनानि, वैतानवेदीशङ्कध्यानामौदुम्बरीणां शाखानां राशिभिः पवित्रितपर्यन्तानि, वैश्वदेवपिण्[2]डपङ्क्तिपाण्डुरितप्रदेशानि, हविर्धूमधूसरिताङ्गनविटपिकिसलयानि, [3]वत्सीयवत्सपालकलालितललत्तरलतर्णकानि, क्रीडत्कृष्णशारच्छागशावकप्रकटितपशुबन्धप्रबन्धानि, शुकसारिकारब्धाध्ययनदीयमानोपाध्यायविश्रान्तिसुखानि, साक्षात्त्रयीतपोवनानीव चिरदृष्टानां बान्धवानां प्रीयमाणो भ्रमन्भवनानि सुखमतिष्ठत् ।

तत्रस्थस्य चास्य कदाचित्कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः सम्फुल्लमल्लिकाधवलाट्टहासो महाकालः । प्रत्यग्रनिर्जितस्यास्तमुपगतवतो वसन्तसामन्तस्य बालापत्येष्विव पयःपायिषु नवोद्यानेषु दर्शितस्नेहो मृदुरभूत् । अभिनवोदितश्च सर्वस्यां पृथिव्यां सकलकुसुमबन्धनमोक्षमकरोत्प्रतपत्नुष्णसमयः । स्वयमृतुराजस्याभिषेका[4]र्द्राश्चामरकलापा इवागृह्यन्त कामिनीनां चिकुरचयाः कुसुमायुधेन । हिमदग्धसकलकमलिनीकोपेनेव हिमालयाभिमुखीं यात्रामदादंशुमाली ।

अथ ललाटन्तपे तपति तपने लिखि[5]तललाटिकापुण्ड्रकैरल[6]कचीरचीवरसंवीतैः स्वेदोदबिन्दुमुक्ताक्षवलयवाहिभिर्दिनकराराधननियमा इवागृह्यन्त ललनाललाटेन्दु[7]भिः । चन्दनधूसराभिरसूर्यम्पश्याभिः कुमुदिनीभिरिव दिवसमसुप्यत सुन्दरीभिः । निद्रालसा रत्नालोकमपि नासहन्त दृशः, किमुत जरठमातपम् । अशिशिरसमयेन चक्रवाकमिथुनाभिनन्दिताः सरित इव

१ 'कामण्डलव्य०' अ—क. २ '०पिण्डपाण्डुरित०' ब. ३ 'वत्सीयबालकलालित०' अ—क. ४ '०राजस्यागृह्यन्ताभिषेका०' ब. ५ 'चन्दनलिखित०' ब. ६ 'अलकचीवर०' ब. ७ '०ललाटेन्दुद्युतिभिः' ब.

तनिमानमानीयन्त सोडुपाः शर्वर्यः। अभिनवपटुपाटलामोदसुरभिपरिमलं न केवलं जलम्, जनस्य पवनमपि पातुमभूदभिलाषो दिवसकरसन्तापात्।

क्रमेण च खरखगमयूखे,[1] खण्डितशैशवे, शुष्यत्सरसि, सीदत्स्रोतसि, मन्दनिर्झरे, झिल्लिकाझाङ्कारिणि, कातरकपोतकूजितानुबन्धबधिरितविश्वे, विश्वस्तपतत्रिणि,[2] करीपङ्कपमस्रति, विरलवीरुधि, रुधिरकुतूहलिकेसरिकिशोरकलिह्यमानकठोरधातकीस्तबके, ताम्यत्स्तम्बेरमयूथवमथुतिम्यन्महामहीधरनितम्बे, दिनकरदूयमानद्विरददीनवदनाश्यानदानश्यामिकालीनमूकमधुलिहि,[3][4] लोहितायमानमन्दारसिन्दूरितसीम्नि, सलिलस्यन्दसन्दोहसन्देहमुह्यन्महामहिषविषाणकोटिविलिख्यमानस्फुटत्स्फाटिकदृषदि,[5] घर्मममर्मरितगर्मुति, तप्तपांशुकुकूलविकिरणकातरविकिरे,[6] विवरशरणश्वाविधे, तटार्जुनकुररकूजाज्वरविवर्तमानोत्तानशफरशारपङ्कशेषपल्वलाम्भसि,[7] दावजनितजगन्नीराजने, रजनीराजयक्ष्मणि, कठोरीभवति निदाघकाले, प्रतिदिशमाटीकमाना इवोषरेषु प्रपावार्टकुटीपटलप्रकटलुण्ठकाः,[8] प्रपक्वकपिकच्छूगुच्छच्छटाच्छोटनचापलैरकाण्डकण्डूला इव कर्षन्तः शर्करिलाः कर्करस्थलीः, स्थूलदृषच्चूर्णमुचः, मुचुकुन्दकन्दलदलनदन्तुराः, समन्ततः[9] पतन्मुखरचीरीगणमुखशीकरशीक्यमानतनवः, तरुणतरतरणितापतरले तरन्त इव तरङ्गिणि मृगतृष्णिकातरङ्गिणीनामलीकवारिणि, शुष्यच्छमीमर्मरमारवमार्गलङ्घनलाघवजवजङ्घालाः, रैणवावर्तमण्डलीरेचकरासरसरभसारब्धनर्तनारम्भारभटीनटाः, दावदग्धस्थलीमषीमलनमलिनाः, शिक्षितक्षपणकवृत्तय इव वनमयूरपिच्छचयानुच्चिन्वन्तः, सप्रयाणगुञ्जा इव शिञ्जानजरत्करञ्जमञ्जरीबीजजालकैः, सप्ररोहा इवातपातुरवनमहिषनासानिकुञ्जस्थूलनिःश्वासैः, सापत्या इवोड्डीयमानजवनवातहरिणपरिपाटीपेटकैः, सभ्रुकुटय इव दह्यमानखलधानतुसकूटकुटिलधूमकोटिभिः, सावीचिवीचय इव महोष्ममुक्तिभिः, लोमशा इव शीर्यमाणशाल्मलिफलतूलतन्तुभिः, दद्रुणा[10] इव शुष्कपलप्रकराकृष्टिभिः, सिराला इव तृणवेणीविकिरणैः,[11] उच्छ्मश्रव इव धूयमाननवयवशूकशकलशङ्कुभिः, दंष्ट्राला इव चलितशललसूचीशतैः, जिह्वाला इव वैश्वानरशिखाभिः, उत्सर्पत्सर्पकञ्चुकचूडालाः,[12] ब्रह्मस्तम्भरसाभ्यवहरणाय कवलग्रहमिवोष्णैः कमलमधुभिरभ्यस्यन्तः, सकलसलिलोच्छोषणघर्मघोषणापटहैरिव[13] शुष्कवेणुवनास्फोटनपटुरवैस्त्रिभुवनभीषिकामुद्भावयन्तः, च्युतचलचापपक्षश्रेणीशारितसृतयः, त्विषिमन्मयूखलतालातप्लोषकल्माषवपुष इव स्फुटितगुञ्जाफलस्फुलिङ्गाङ्गाराङ्कि-

---

१ '०मयूखखण्डित०' ब. २ 'श्वसत्पत०' ब. ३ 'दिनकर'—इत्येतन्नास्ति अ—क—पुस्तकयोः. ४ 'दीनदानाश्यानश्यामिका०' अ—क. ५ 'सन्दोहमुह्य०' ब. ६ '०कुकूलकातर०' अ—क. ७ 'कूटाज्वर०' क; 'कूटज्वरनिवर्त०' अ. ८ 'प्रपाकट०' ब. ९ 'सन्ततपनतापमुखर०' ब. १० 'दद्रुला' क. ११ '०विकिरणैः' अ—क. १२ '०कश्चुकैश्चूडाला इव' ब. १३ 'घोषणाघोरपटलैरिव' ब.

ताङ्गाः, गिरिगुहागम्भीरझाङ्कारभीषणभ्रान्तयः, भुवनभस्मीकरणाभिचारचरुपचनचतुरा रुधिराहुतिभिरिव पारिभद्रद्रुमस्तबकवृष्टिभिस्तर्पयन्तस्तारवान्वनविभावसून्, अशिशिरसिकतातारकितरंहसः, तप्तशैलविलीयमानशिलाजतुरसलवलिप्तदिशः, दावदहनपच्यमानचटकाण्डखण्डखचिततरुकोटरकीटपटलपुटपाकगन्धकटवः, प्रावर्तन्तोन्मत्ता मातरिश्वानः।

सर्वतश्च भूरिभस्त्रासहस्रसन्धुक्षणक्षुभिता इव जरठाजगरगम्भीरगलगुहावाहिवायुभिः[1], क्वचित्स्वच्छन्दतृणचारिणो हरिणाः, क्वचित्तरुतलविवरविवर्तिनो बभ्रवः, क्वचिज्जटावलम्बिनः[2] कपिलाः, क्वचिच्छकुनिकुलकुलायपातिनः श्येनाः, क्वचिद्विलीनलाक्षारसलोहितच्छवयोऽधराः, क्वचिदासादितशकुनिपक्षकृतपटुगतयो विशिखाः, क्वचिद्दग्धनिःशेषजन्महेतवो निर्वाणाः, क्वचित्कुसुमवासिताम्बरसुरभयो रागिणः. क्वचित्सधूमोद्गारा मन्दरुचयः, क्वचित्सकलजगद्ग्रासघस्मराः सभस्मकाः, क्वचिद्वेणुशिखरलग्नमूर्तयोऽत्यन्तवृद्धाः[3], क्वचिद्बलोपयुक्तशिलाजतवः क्षयिणः, क्वचित्सर्वरसभुजः पीवानः, क्वचिद्दग्धगुग्गुलवो रौद्राः, क्वचिज्ज्वलितनेत्रदहनदग्धसकुसुमशरमदनाः कृतस्थाणुस्थितयः, चटुलशिखानर्तनारम्भारभटीनटाः, शुष्ककासारसृतिभिः[4] स्फुटक्षीरसनीवारबीजलाजवर्षिभिर्ज्वालाञ्जलिभिरर्चयन्त इव घर्मघृणिम्, अघृणा इव हठहूयमानकठोरस्थलकमठवसाविस्रगन्धगृध्नवः, स्वमपि धूममम्भोदसमुद्भूतिभियेव भक्षयन्तः, सतिलाहुतय इव स्फुटद्बहलवालकीटपटलाः कक्षेषु[5], श्विक्षिण इव शोषविचटद्बहलकलशबलशम्बूकशुक्तयः[6] शुष्केषु सरःसु, स्वेदिन इव विलीयमानमधुपटलगोलगलितमधूच्छिष्टवृष्टयः काननेषु, खलतय इव परिशीर्यमाणशिखासंहतयो[7] महोषरेषु, गृहीतशिलाकवला इव ज्वलितसूर्यमणिशकलेषु शिलोच्चयेषु, प्रत्यदृश्यन्त दारुणा दावाग्नयः।

तथाभूते च तस्मिन्नत्युग्रे ग्रीष्मसमये कदाचिदस्य स्वगृहावस्थितस्य भुक्तवतोऽपराह्णसमये भ्राता पारशवश्चन्द्रसेननामा प्रविश्याकथयत्—'एष खलु देवस्य चतुःसमुद्राधिपतेः सकलराजचक्रचूडामणिश्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणेः सर्वचक्रवर्तिनां धौरेयस्य महाराजाधिराजपरमेश्वरश्रीहर्षदेवस्य भ्राता कृष्णनाम्ना भवतामन्तिकं प्रज्ञाततमो दीर्घाध्वगः प्रहितो द्वारमध्यास्ते' इति। सोऽब्रवीत्—'आयुष्मन्, अविलम्बितं प्रवेशयैनम्' इति।

अथ तेनानीयमानम्, अतिदूरागमनगुरुजडजङ्घम्, कार्दमिकचेलचीरिकानियमितोच्चण्डचण्डातकम्, पृष्ठप्रेङ्खत्पटच्चरकर्पटघटितगलितग्रन्थिम्[8], अतिनिबिडसूत्रबन्धनिम्नितान्तरालकृतव्यवच्छेदया[9] लेखमालिकया परिकलि-

---

१ '०वायवः' अ-क. २ 'जटावल्कलावलम्बिनः' ब. ३ 'क्वचिदवलम्बितवेत्रयष्टयोऽत्यन्त०' ब. ४ 'सृतिषु' ब. ५ 'कक्ष्येषु' अ-क. ६ 'शबल' ब. ७ 'पर्यन्तशीर्यमाण०' ब. ८ 'गलग्रन्थिम्' ब. ९ 'निर्मित' ब.

समूर्धानम्, प्रविशन्तं लेखहारकमद्राक्षीत् । अप्राक्षीच्च दूरादेव—'भद्र, भद्रमशेषभुवननिष्कारणबन्धोस्तत्रभवतः कृष्णस्य' इति । सः 'भद्रम्' इत्युक्त्वा प्रणम्य नातिदूरे समुपाविशत् । विश्रान्तश्चाब्रवीत्—'एष खलु स्वामिनो माननीयस्य लेखः प्रहितः' इति विमुच्य चार्पयत्। अथ बाणः सादरं गृहीत्वा स्वयमेवावाचयत्—'मेखलकात्सन्दिष्टमवधार्य फलप्रतिबन्धी धीमद्भिरपहरणीयः कालातिपात इत्येतावदत्रार्थजातम्। इतरद्वार्तासंवादनमात्रकम्' । अवधृतलेखार्थश्च समुत्सारितपरिजनः सन्देशं पृष्टवान्। मेखलकस्त्ववादीत्—'एवमाह मेधाविनं स्वामी—जानात्येव मान्यो यथैकगोत्रता वा, [1]समानजातिता वा, समं संवर्धनं वा, एकदेशनिवासो वा, दर्शनाभ्यासो वा, परस्परानुरागश्रवणं वा, परोक्षोपकारकरणं वा, समानशीलता वा, स्नेहस्य हेतवः। त्वयि तु विना कारणेनादृष्टेऽपि प्रत्यासन्ने बन्धाविव बद्धपक्षपातं किमपि स्निह्यति मे हृदयं दूरस्थेऽपीन्दोरिव कुमुदाकरे। भवन्तमन्तरेणान्यथा चान्यथा चायं चक्रवर्ती दुर्जनैर्ग्राहित आसीत्। न च तत्तथा। न सन्त्येव ते येषां सतामपि सतां न विद्यन्ते मित्रोदासीनशत्रवः। शिशुचापलपराचीनचेतोवृत्तितया च भवतः केनचिदसहिष्णुना यत्किञ्चिदसदृशमुदीरितमितरो लोकस्तथैव तद्गृह्णाति वक्ति च। सलिलानीव खलु [2]गतानुगतिकानि लोलानि भवन्त्यविवेकिनां मनांसि बहुमुखश्रवणनिश्चलीकृतनिश्चयः किं करोतु पृथिवीपतिः। तत्त्वान्वेषिभिश्चास्माभिर्दूरस्थितोऽपि प्रत्यक्षीकृतोऽसि। विज्ञप्तश्चक्रवर्ती त्वदर्थं यथा—प्रायेण प्रथमे वयसि सर्वस्यैव चापलैः शैशवमपराध्यतीति। तथेति च प्रतिपन्नं स्वामिना। अतो भवता राजकुलमकृतकालक्षेपमागन्तव्यम्। अवकोशीवादृष्टपरमेश्वरो बन्धुमध्यमधिवसन्नासि मे बहुमतः। न च सेवावैषम्यविषादिना वा परमेश्वरोपसर्पणभीरुणा वा भवता भवितव्यम्। यतो यद्यपि—

स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखम्।
मोहात्समाक्षिपति जीवनमप्यकाण्डे
कष्टं मनोभव इवेश्वरदुर्विदग्धः ॥ ३ ॥

तथाप्यन्ये ते भूपतयः, अन्य एवायं न्यकृतसगनलनिषधनहुषाम्बरीषदशरथदिलीपनाभागभरतभगीरथययातिरमृतमयः स्वामी । नास्याहङ्कारकालकूटविषदिग्धदुष्टा हृदयः, न गर्वगुरुगरगलग्रहगदगद्गदा गिरः, नातिस्मयोन्मापस्मारविस्मृतस्थैर्याणि स्थानकानि, नोद्दामदर्पदाहज्वरवेगविक्लवा विकाराः, नाभिमानमहासंनिपातनिर्मिताङ्गभङ्गानि गतानि, न मदार्दितवक्रीकृतौष्ठनिष्ठ्यूतनिष्ठुराक्षराणि जल्पितानि। तथा च, अस्य विमलेषु साधुषु रत्नबुद्धिः, न शिलाशकलेषु । मुक्ताधवलेषु प्रसाधनधीः, नाभरणभारेषु।

---

१ 'समानज्ञानता वा' इत्येतदधिकं ब-पुस्तके. २ 'गतागतिकानि' अ-क.

दानवत्सु कर्मसु साधनश्रद्धा, न करिकीटेषु । सर्वाग्रेसरे[1] यशसि महाप्रीतिः, न जीवितजरत्तृणे । गृहीतकरास्वाशासु प्रसाधनताभियोगः[2], न निजकलत्रचर्म[3]पुत्रिकासु । गुणवति धनुषि सहायबुद्धिः, न पिण्डोपजीविनि सेवकजने । अपि च । अस्य मित्रोपकरणमात्मा, भृत्योपकरणं प्रभुत्वम्, पण्डितोपकरणं वैदग्ध्यम्, बान्धवोपकरणं लक्ष्मीः, कृपणोपकरणमैश्वर्यम्, द्विजोपकरणं सर्वस्वम्, सुकृतसंस्मरणोपकरणं हृदयम्, धर्मोपकरणमायुः, साहसोपकरणं शरीरम्, असिलतोपकरणं पृथिवी, विनोदोपकरणं राजकम्, प्रतापोपकरणं प्रतिपक्षः । नास्याल्पपुण्यैरवाप्येत सर्वातिशायिसुखरसप्रसूतिः पादपल्लवच्छाया' इति । श्रुत्वा च तमेव चन्द्रसेनं समादिशत्—'कृतकशिपुं विश्रान्तसुखिनमेनं कारय' इति ।

अथ गते च तस्मिन्, पर्यस्ते च वासरे, सङ्घट्ट[4]मानरक्तपङ्कजसम्पुटपीयमान इव क्षयिणि क्षामतां व्रजति बालवायसास्यारुणेऽपराह्णातपे, शिथिलितनिजवाजिजवे जपापीडपाटले[5]ऽस्ताचलशिखरस्खलिते खञ्जतीव कमलिनीकण्टकक्षतपादपल्लवे पतङ्गे, पुरः परापतति प्रेङ्खदन्धकारले[6]शलम्बालके शशिविरहशोकश्याम इव श्यामामुखे, कृतसंध्योपासनः शयनीयमगात् । अचिन्तयच्चैकाकी—'किं करोमि । अन्यथा सम्भावितोऽस्मि राज्ञा । निर्निमित्तबन्धुना च सन्दिष्टमेवं कृष्णेन । कष्टा च सेवा । विषमं च भृत्यत्वम् । अतिगम्भीरं महद्राजकुलम् । न च तत्र मे पूर्वजप्रवर्तिता प्रीतिः, न कुलक्रमागता गतिः, नोपकारस्मरणानुरोधः, न बालसेवास्नेहः, न गोत्रगौरवम्[7], न पूर्वदर्शनदाक्षिण्यम्, न प्रज्ञासंविभागोपप्रलोभनम्, न विद्यातिशयकुतूहलम्, नाकारसौन्दर्यादरः, न सेवाकाकुकौशलम्, न विद्वद्गोष्ठीबन्धवैदग्ध्यम्, न वित्तव्ययवशीकरणम्, न राजवल्लभपरिचयः । अवश्यं गन्तव्यम् । सर्वथा भगवान्पुरारातिर्भुवनगुरुर्गतस्य[8] मे[9] सर्वं सांप्रतमाचरिष्यति' इत्यवधार्य गमनाय मतिमकरोत् ।

अथान्यस्मिन्नहन्युत्थाय, प्रातरेव स्नात्वा, धृतधौतधवलदुकूलवासाः, गृहीताक्षमालः, प्रास्थानिकानि सूक्तानि मन्त्रपदानि च बहुशः समावर्त्य, देवदेवस्य विरूपाक्षस्य क्षीरस्नपनपुरःसरां सुरभिकुसुमधूपगन्धध्वजबलिविलेपनप्रदीपकबहुलां विधाय पूजां परमया भक्त्या, प्रथमहुततरलतिलत्वग्विघ[10]टनचटुलमुखरशिखाशेखरं प्राज्याज्याहुतिप्रवर्धितदक्षिणार्चिषं भगवन्तमाशुशुक्षणिं हुत्वा, दत्वा द्युम्नं यथाविद्यमानं द्विजेभ्यः, प्रदक्षिणीकृत्य प्राङ्मुखीं नैचिकीम्, शुक्लाङ्गरागः, शुक्लमाल्यः, शुक्लवासाः, रोचनाचित्रदूर्वाग्रपल्लवग्रथितगिरिकर्णिकाकुसुमकृतकर्णपूरः, शिखासक्तसिद्धार्थकः, पितुः कनीयस्या

१ 'सर्वाशाग्रेसरे' ब. २ 'दिक्षु प्रसाधनाभियोगः' ब. ३ 'धर्म' ब. ४ 'संघटमान' ब. ५ 'पाटलिम्नि' ब. ६ 'लेखा' ब. ७ 'तत्रगौरवम्' ब. ८ 'भवानीपतिर्भुवनपतिः' ब. ९ 'मे शरणं सर्वं' ब. १० 'विचटन' अ—क.

